बृ०
३६२

ललाटे स्मरहर्त्ता च चवतु धौम्योऽथ धनप्रदः स्थिरासनः श्रोत्रयोश्च महाकायश्च नासिके ग्रा
स्यदंतो शृंजिह्वासु सर्वकर्मविरोधकः हनुं मे लोहितः पातु लोहिताक्षश्च कंठके स्कं
धयोश्चैव मे रक्षेत्स्वामी भगानां कृपाकरः धरात्मजो भुजौ रक्षेत्कुजो रक्षेत्करद्वयं सौमो
मे हृदयं पातु सूतिदस्तनयोर्द्वये भूमिनंदनश्च नाभौ गुह्ये त्वंगारकं न्यसेत्
ऊरू मम यमो रक्षेज्जान्वो रोगापहारकः जंघयोर्वृष्टिकर्त्ता च वृष्यापहर्त्ता च गुल्फ
योः पादांगुष्ठे च पादौ च सर्वकामफलप्रदः शुक्तिमे पुरतो रक्षेत्पृष्ठं रक्षेच्च दक्षि
णे वामे मेव धनुः पातु उत्तरे वश्वारसर्पगा ऊर्ध्वं षडाननः पातु अधस्तात्पृथिवीम
म एवं न्यस्तशरीरोऽसौ चिंतयेद्भूमिनंदनं अथ कथा सूत उवाच पूजितो देवदे
वैस्तु मंगलो मंगलप्रदः गौतमेन पुरा पृष्टो लोहितांगो महाग्रहः गौतम उवा
च कथयस्व महाभाग ग्रहस्य पूजनमुत्तमं मंत्रमाराधनं दानं सर्वपापप्रणाशनं

राम
३६२

अग्निर्मूर्द्धेति मंत्रेण पूर्वोक्तमो मंगलाय स्थापा आसनादि पुष्पांतां पूजां कृत्वा यंत्रस्थे
कविंशतिकोष्ठेष्वंगानि पूजयेदेकविंशतिनामभिः यथा मंगलाय नमः पादौ पूजया
मि भूमिपुत्राय जानुनी ऋणहर्त्रे॰ ऊरू॰ धनप्रदाय॰ कटिं पू॰ स्थिरासनाय॰ गुह्यं॰
महाकायाय॰ उदरः सर्वकर्मावरोधकाय वामबाहुं पू॰ लोहिताय॰ दक्षिणबाहुं पू॰
लोहिताक्षाय॰ कंठं पू॰ सामगानां कृपाकराय॰ मुखं पू॰ धरात्मजाय॰ नासिकां
पू॰ कुजाय॰ अक्षिणी॰ भौमाय॰ ललाटं॰ भूतिदाय॰ भ्रूमध्यं पू॰ भूमिनंदनाय॰
मस्तकं पू॰ अंगारकाय॰ शिखां पू॰ यमाय॰ सर्वांगं पू॰ सर्वरोगापहारकाय॰ वा
ऽर्द्धयं पू॰ वृष्टिकर्त्रे मूर्द्धादिपादपर्यंतं पूजयामि॰ वृष्टेरपहर्त्रे चरणादिमस्तक
पर्यंतं पू॰ वृष्टेरपहर्त्रे विपर्ययं पूजयामि अत्र मूलमंत्रमहोदधिमाते अन्यत्र क
चिदन्यथा सप्रकारः स च यथा शिखायां मंगलः पातु भूमिपुत्रश्च मूर्द्धनि

2

बृं०
१८०

सपुत्रेनमनूनमतिं दकं धर्मज्ञंदोषरहितंसंतुष्टंपरिपूज्यच आचार्यंवरयेत्प्राज्ञः सुस्ना
तोभूषितोव्रती ह्रस्वंचविकलंहीनमतिदीर्घंजडंतथा देवतानामसक्तंचवधिरंदीर्घ
लिंगकं वेदहीनंदुराचारंमलिनंबहुभाषिणं निंदकंपिशुनंदुष्टंमंथकंचविवर्ज्ज
येत् नित्यंनिर्वर्त्यसकलंसंकल्पमनसीप्सितं चंपकैर्मल्लिकापुष्पैर्जातीकिंशु
कपाटलैः नंद्यावर्त्तैः श्रियावर्त्तैर्द्रोणपुष्पैः कदंबकैः अन्यैः शिवागमप्रोक्तैर्बिल्व
पत्रैरखंडितैस्तथा नागवल्लीदलैर्वापिरत्नैर्नानाविधैरपि धान्यैश्चविविधैःश्वेत
रक्तैर्व्रीहितंडुलैः लक्षपूजांप्रकुर्वीतमूलमंत्रेणधीमते स्वर्णपुष्पंप्रत्यहंतंकर्पू
रावर्त्तिकंभवेत् इत्येकस्मिन्दिनेवापिद्वयोर्वात्रिदिनेपिवा पुष्पलाभानुसारेण
बहुभिर्वादिनैर्यजेत् समाप्तौश्रीशिवायैकं सौवर्णपुष्पमर्पयेत् पुष्पांजलि
त्रयंस्वर्णविल्वपत्रसमन्वितं भवःशर्वस्तथारुद्रस्ततःपशुपतिःस्मृतः उग्रो

स्नास्य ब्रमावत: विश्वास: क्रियतामस्मिन् व्यतीपातव्रतोत्तमे इत्युक्त्वा स्वर्गतः सो
पराज्ञो वैपश्यत सादरा तं दृष्ट्वा विस्मितो भूत्वा देवदेवस्य चक्रिणः हर्यश्वः ज्ञानवां
स्तेन विष्णोस्तत्परमं पदं अतस्त्वं कुरु राजेंद्र व्यतीपातव्रतोत्तमे सर्वपापक्षय
करं नृणामिह सुखप्रदं इदं यः कुरुते मर्त्यः श्रद्धया भावसंमितः सर्वपापवि
निर्मुक्तो विष्णुसायुज्यमाप्नुयात् यया तु पुत्रकामिन्या कृतं सा लभते सुतान्
स्त्रीकामेनेह तत्तेव तत्सलभेन्नारीमनुत्तमां व्यतीपातदिने पठेत् ज्ञानवान् धनवा
न् श्रीमान् इहैव च सुखी भवेत् य इदं शृणुयाद्भक्त्या विष्णुलोके महीयते इति व्य
तीपातव्रतं अथ चंदनपूजाविधिः ईश्वर उवाच लवनपूजाविधिं देवि कथया
मि समासतः यां कृत्वा प्राणिनः सर्वे मम सान्निध्यभागिनः श्रावणे तथाष्ट
म्यां सोमवारे समारभेत् अन्यस्मिन् दिने वापि शिवमर्कं द्विजोत्तमं सपत्नीकं

द्वे कुमुद्वत्कुमुदिन्यौ ... द्वे कुमुदप्रायदेशे

स्यात् ... द्वे कुमुदलतायाः ...

कुमुद्वती कुमुदिन्यां नलिन्यां तु बिसिनी पद्मिनी मुखाः । वा पुंसि पद्मं नलिनमरविं-

दं महोत्पलं सहस्रपत्रं कमलं शतपत्रं कुशेशयं । पंकेरुहं तामरसं सारसं सरसीरुहं । बि-

पद्मसमानस्य

सप्रसूनराजीवपुष्कराम्भोरुहाणि च । पुंडरीकं सितांभोजमथ रक्तसरोरुहे । रक्तोत्पलं

कोकनदं नालो नालमथास्त्रियां । मृणालं बिसमब्जादिकदंबे षंडमस्त्रियां । करहाटः

शिफाकन्दः किंजल्कः केसरोस्त्रियां । संवर्तिका नवदलं बीजकोशो वराटकः । इति वारिवर्गः

जड़ केसरकीतरी नवीनपत्र पद्मबीजस

उक्तं स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकं ॥ पातालं भोगिनरकं वारि चैषां च संगतं ॥ [illegible]मरसिं
हकृतौ नामलिंगानुशासने स्वरादिकांडः प्रथमः सांगएव समर्थितः ॥ श्रीरामचंद्रायनमः ॥ रामरा

ओं श्रीगणेशाय नमः॥ अथ कश्चित्कायस्थ
ज्ञातीयोऽपूर्णपञ्चदशाब्दायुर्बालः शिमला
पर्वतस्थ राजकीय पाठशालायां प्रपठन्
केनचिन्म्लेच्छेन तत्रैव पाठयता मानदानादि
प्रेमपूर्वकं कुर्वता सह मिसिर देशमगमत् त
त्र तद्वशीभूतः संस्तेन सार्द्धं सह भुज्यतादिभिः
समसृजत् तत्र च तस्य म्लेच्छमतानवलीढचि
त्तत्वेपि धनाभावेनान्य साहाय्याभावेन वाल्ये
न च तं संसर्गं त्यक्तुमशक्तस्य वैवश्यादष्टमा
साधिक वर्षद्वयावधिः कालस्तथैव व्यतीतः

ततो मिसिरादागत्य प्राप्तबोधः स काशी
हरिद्वारं च जम्बूनगरं च गत्वा स्वपापपरिहा
राय प्रायश्चित्तं पृच्छन्पृच्छन् लवपुरमासाद्य
तत्र श्रीनरवरहरिवंशसिंहसदनसमागतवि
द्वत्परिषदि स्वावज्ञां समीढ्यां प्रणम्य न्यवेद
यत् पूर्वोक्तकाश्यादिस्थपण्डितोपदिष्टप्रा
यश्चित्तबोधकानि पत्राणि तदीयनामाङ्कितानि
नि स्वपातकिसंसर्गादि व्यवहारज्ञातॄणां स्वस
जातीयानां कायस्थानां हस्ताक्षरैः सहितानि
प्रादर्शयत् -
ततश्च तत्सदोगत विद्वद्भिः सनृपैर्द्धर्मशा

१ सत्रसु विचार्य्यकथमपि ध्यामइत्युक्तम् -

अथाधुनालन्दनस्थपण्डितैराङ्ग्लानांमार्गमाणानाम्प्रायश्चित्तानियेद्विजाः जानन्तोनप्रयच्छन्ति तेपितद्दोषभागिनः १ यत्तुएषमुद्धृतेविप्रेम्रियमाणेजलादिषु नत्तुएंतारितेपापात्प्रायश्चित्तैस्तुमानवे इत्याङ्गिरसवचोद्वयोक्तप्रायश्चित्ताप्रदानजन्यतद्दोषभागित्वनिवृत्तिप्रायश्चित्तप्रदानजन्यपारलौकिकशुभापूर्व्वावाप्त्यैकतिचिद्धर्म्मशास्त्रग्रन्थानवलोक्यतस्मैनिष्कृतिमुपदेष्टुंप्रयतमानैर्जातिशक्तिगुणापेक्षंसकृद्बुद्धिकृतंतथा-अनुवन्धादिविज्ञायप्रायश्चित्तंप्रकल्पयेदिति विश्वामित्रवचोत्तरोधाज्ज्ञानाज्ञानकृतपापविमर्शोत्तरंप्रायश्चित्तोपदेशस्यौचित्त्वेनतावदयंसंसर्गोज्ञानतोज्ञानतोवेतिविचार्य्यते -

नज्ञानतः वालानांधर्माधर्म्मविवेचनेत्तत्वात् कायस्थवालानांतुजन्मतएवमद्यमांससेवनम्लेच्छस्पृष्टपक्वान्नादिभोजनेप्रवृत्तानांतुसुतराम् अन्यत्रापिवालेषुप्रमादवाहुल्यस्यनिराकरणेतसित्रादिप्रयत्नस्यवहुशोदृष्टत्वात् अज्ञत्वादेववालाअनुग्रा ^

ल्पोऽइत्युक्तं पराशरेण तद्यथा दुर्व्वलेनुग्र
हः कार्यस्तथाच शिशुवृद्धयोः ततोन्यथाभ
वेद्दोषस्तस्मान्नानुग्रहीभवेदिति आषोड
शाद्बाल इति बाललक्षणं च्यवनेनोक्तम् यद्य
पि ज्ञानकामयोस्तुल्यता तथापिनायं संसर्ग ऐ
च्छिकोपि वञ्चकप्रतारणाजन्यतात्तदिच्छा
याः वहुभिः कितवैर्वहुवोजनास्तरुणाः स्थवि
राश्च दैनंदिन च्छाद्मिक वार्त्तालापेन प्रतारि
ताधर्म्मात्प्रच्युता दृश्यन्ते किमुत वालाः इदा
नीतनैरेवार्य्यब्रह्मसमाजिभिर्वञ्चिता वहवः
शिखोपवीतादि परित्यजतः श्रीगङ्गादितीः।
र्थानि प्रतिमादिष्वीश्वरार्चनं च विनिन्दन्तो
म्लेच्छस्पृष्टान्नभोजिनो म्लेच्छमतमतमन
वलम्ब्यापि अशनपानादीनां धर्मेण न को
पि सम्बन्धो धर्मो मानसोन्य एवेति प्रजल्प।
न्तो निरीक्ष्यन्ते तस्मात्प्रतारक म्लेच्छच्छाद्मि
क व्यवहाररूपोपाधिकृतसंसर्गस्य न कामकृ
तत्वम् किन्तु तन्म्लेच्छबुद्धिवलनिष्पन्नत्वमेव
नहि कायिकमेव वलं वलं न बुद्धिवलं वलमि
त्यत्र मानमुपलभामः अतएव व्यवहारे या
ज्ञवल्क्येन वलोपधि विनिर्वृत्तान्व्यवहारा।

२

न्निवर्जयेदितिवदता वलोपध्योः समभिव्याहारः कृतः विनापि साक्षिभिर्ह्येखयं स्वहस्त लिखितं तु यत् तत्प्रमाणं स्मृतं लेख्यं वलोपधिकृताहृते इत्यस्मिन्वाक्येपि सवलोपधी समभिव्याजहार मिताक्षरायां नारदोपि मज्जाभियुक्तस्त्रीवालवलात्कारकृतं च यत् तदप्रमाणं लिखितं भयोपधिकृतं तथेतिवाक्ये साम्यमेव भयोपधिवलानां व्याजहार नच व्यवहारे स्तु वलोपध्योस्सौ लभ्यप्रायश्चित्त निर्देशे तु तन्नोक्तमिति शक्यम् यतो मिताक्षरायां देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः प्रायश्चित्तं प्रकल्प्यं स्यादिति याज्ञवल्क्यीयवचनव्याख्यावसरे विज्ञानेश्वरः दण्डह्रासवृद्ध्यपेक्षया च प्रायश्चित्तगुरुलघुभावोस्तीति विस्तरेण प्रतिपादितवान् तस्माद्बलाद्दासीकृता येतु म्लेच्छचाण्डालदस्युभिरित्यादीपस्तम्बोक्तप्रायश्चित्तयोग्योयं संसर्गी तत्र वलादितिपदस्योपधेरप्युपलक्षकत्वात् सर्वान्वलकृतानर्थानकृतान्मनुरब्रवीदिति मनुस्मृतिव्यवहाराध्यायस्य वलपदवत् अतएवापस्तम्बवाक्यनानुपूर्वीकार्यके देवलर्षिवचने र

णवीरकारितधर्मशास्त्रनिबन्धप्रायश्चित्तभा
गस्थे नीतेनेत्येवपठितम् बलोपध्याद्यसम
ञ्जसव्यवहारेण म्लेच्छैनीतेनेत्यध्याहारद्वारा
तदर्थग्राहयितुमिति तथाचदेवलः अपेयं
येनसम्पीतमभक्ष्यंयेनभक्षितम् म्लेच्छैर्नीते
नविप्रेणअगम्यागमनंकृतम् १ तस्यशुद्धिं
प्रवक्ष्यामियावदेकंतुवत्सरम् चांद्रायणंतुवि
प्रस्यसपराकंप्रकीर्त्तितम् २ क्षत्रियस्यपरा
कैकंपादकृच्छ्रेणसंयुतम् पराकार्द्धन्तुवैश्यस्य
शूद्रस्यदिनपञ्चकम् ३ नखलोमविहीनानां
प्रायश्चितंविधीयते प्रायश्चित्तंद्विजानांतुप्रा
जायत्यंविशोधनम् ४ चांद्रायणंत्वाहिताग्नेः
पराकस्त्वथवाभवेत् चांद्रायणंपराकंचच
रेत्सम्वत्सरोषितः ५ संवत्सरोषितःशूद्रो
मासार्द्धंयावकंपिबेत् मासमात्रोषितःशूद्रः
कृच्छ्रपादेनशुद्ध्यति ६ ऊर्द्धंसम्वत्सरात्क
ल्प्यंप्रायश्चित्तंद्विजोत्तमैः सम्वत्सरैश्चतुर्भि
स्तुतद्भावमधिगच्छतीति कल्प्यमित्यस्यद्वि
तीयेवर्षेद्विगुणं तृतीयेत्रिगुणंचतुर्थेचतुर्गु
णमित्यर्थइति–
स्यादेतत् अस्मद्दृष्टिगोचरनिबन्धेषुप्राय
श्चित्तविवेकप्रायश्चित्तमयूखहरिनाथनिब।

न्धादिषु तत्तन्निवन्धकृद्भिरापस्तम्बीयवाक्य
स्यवलादिति पदमुपध्युपलक्षणत्वेनन व्या
ख्यातमस्तीत्यनेनानकाल्पनिकेस्मिन्नर्थेव
यंविभ्यसामोधर्मभङ्गभियाप्रसिद्धतरेदैहि
कव्यापारेप्रसस्यहरणादिरूपेवुद्ध्युपयो
गानपेक्षकेर्थएवप्रतीमः इतिचेत् स्वीकु
र्मोवयम् अस्तुमहाव्रतयोग्योयंसंसर्गी-
यथाहमनुः चण्डालान्त्यस्त्रियोगत्वाभुक्त्वा
चप्रतिगृह्यच पतत्यज्ञानतोविप्रोज्ञानात्सा
म्यंतुगच्छतीति चंडालादिसाम्यंप्रतिपादय
तामनुनास्तुमनुनापिकामतोत्यन्ताभ्यासे
मरणान्तिकंदर्शितम् – अज्ञानतोवहुका
लाभ्यासेतुपतति अतः पतितप्रायश्चित्तंद्वाद
शाब्दंकुर्यात् इति

प्रायश्चित्तमयूखेतु तत्राज्ञानतोत्यन्ताभ्या
सेपातित्योक्तेर्द्वादशाब्दंप्रायश्चित्तम् कामत
स्तुचतुर्विंशत्यब्दमित्युक्तम्

मिताक्षरायांविज्ञानेश्वरस्तु अत्रचब्रह्मह
दिषु यद्यपिकामतोमरणान्तिकमुपदिष्टंत
थापिसंसर्गिणस्तन्नातिदिश्यते योयेनप
तितेनैषांसंसर्गंयातिमानवः सतस्यैवव्र

13

तं कुर्यात्त संसर्गविशुद्धये इति विष्णुकाक्येव्र
तस्यैवातिदेशान्मरणस्य च व्रतशब्दवाच्य
त्वाभावात् अतोत्र कामकृते संसर्गे द्वादशवा
र्षिकमकामतस्तु तदर्द्धमिति प्राह

बालवृद्धातुराणां तु कामतोर्द्धमकामतः पादइ
त्यपि मिताक्षरायां विज्ञानेश्वरः

विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम् वै
श्येर्द्धं पाद एकस्तु शूद्रजातिषु शस्यत इति मि
ताक्षरायां विष्णुवचनात् वर्णानुरोधनोपि
प्रायश्चित्तं प्रदेयमिति प्रणीतम्

अन्त्यावसायिनस्तु मध्यमाङ्गिरसोक्ताः च
ण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा मा
गधायोगवौ चैव सप्तैते त्यावसायिन इति
ननु चण्डालसाम्यप्रतिपादते कामतः संसर्गे
द्वादशाब्दं प्रायश्चित्तं कथमुक्तं ब्रह्महादि
षु द्वादशाब्दव्रतोपदेशात्तत्संसर्गिणोपि
तादृशं व्रतमिति तु युक्तं चाण्डालादीनां प्राय
श्चित्तविशेषाश्रवणात्कथं तत्संसर्गिणोपि
द्वादशाब्दमिति चेन्न चाण्डालपुष्कसम्लेच्छ
भिल्लपारसिकादिकान् महापातकिनश्चै
व स्पृष्ट्वा स्नायात्सचैलक इति प्रायश्चित्तम

४ पूरवस्य याज्ञवल्क्यवचने महापातकितुल्यत्वा
च्चण्डालादेः युक्तमेतत् - वहूनामेकध
र्मीणामेकस्यापि यदुच्यते सर्वेषां तद्भवेत्का
र्यमेकरूपा हि ते स्मृता इति प्रायश्चित्तमयू
खगतोशनोवचनप्रामाण्यात् - ततश्चका
यस्थस्य वैश्यवर्णत्वेच्यवद्मज्ञानात् - वा
लत्वाच्च पादमात्रम् पादोनवार्षिकं व्रत
मस्य सिद्धम् तत्प्रत्याम्नाय स्तु यथाशक्ति
देयः गंगायां स्नात्वा व्रतं कर्त्तव्यमित्यलम्
इदमेकवर्षकृतसंसर्गस्योक्तं मूलपाणि
कृतव्यवस्थयातु त्रैवार्षिकसंसर्गत्वात्त्रि
गुणं कार्य्यमिति संक्षेपः ॥